साध्यते । नागार्जुनस्य कथनानुसारं - साधारणं प्राणिनः अविद्यया येन यदज्ञानं, तस्य प्राप्तिः भवति, अर्थात् यदेव प्राप्तमस्ति, तस्य विनाशो नास्ति यत् नित्यमपि नास्ति, यन्निरुद्धं न भवति यस्य उत्पत्तिरपि नास्ति तादृशी अवस्था निर्वाणावस्था भविष्यति । निर्वाणस्य तथाभूतस्वरूपं यः जानाति सः तथागतः इत्युच्यते । तथागतस्य स्वरूपमपि वर्णयितुं न शक्यते ।

## ३) अध्यासविवेचनम् :-

शून्यवादिनां माध्यमिकानां कथनमस्ति यत् इदं रजतमित्यत्र रजतस्य यः भ्रमः शुक्तिकायां भविष्यति, तस्य भ्रमस्य आलम्बनं शून्यमेव भवति अर्थात् किमपि सत् नास्तीति । एतेषां मते परमार्थवस्तुत्वेन शुक्तिरिति एकः पदार्थः नास्ति, किन्तु शून्यमेवास्ति । इदं रजतमित्यत्र रजतभ्रमस्यालम्बनं असदेव भवति इति सिध्यति । शून्यवादिनां कथनमस्ति यत् असत्प्रकाशनशक्तिमति या वासना सा स्वयं असत्स्वरूपा सती अपि सत्सदृशत्वेन भासते इति । अयं प्रकाशः अनादिकालादारभ्य निरन्तरं धाराप्रवाहरूपेण चलन् आगच्छति । असत्प्रकाशनशक्तिमति या वासना सा असद्विज्ञानमपि सत्सदृशत्वेन प्रकाशयति, एवं स्वसदृशीं असत्प्रकाशनशक्तिमपि प्रकाशयति । अस्याः वासनायाः विज्ञाने या अस्ति असत्प्रकाशनाशक्तिः सा एव स्वप्नदृष्टान्ते सिध्यति । येन प्रकारेण स्वप्नदशायां असत्पदार्थस्यैव भानं भविष्यति, एवमेव संसारदशायां असत्पदार्थस्यैव सदा भानमवतिष्ठते । अस्याः असत्प्रकाशनशक्ते एव अविद्या अथवा संवृत्तिरित्युच्यते । अतः एव असत्प्रकाशनशक्तिमत्या अविद्यया एव असद्रूपः यः प्रपञ्चः सः एव सत्सदृशत्वेन भासते इति अध्यासविचारः ।

तथा च माध्यमिकदर्शने सत्यद्वयं तिष्ठति-संवृत्ति - पारमार्थिकेति । प्रपञ्चस्य असत्यत्वं मन्यते । पारमार्थिकसत्यस्य नकारात्मकवर्णनं क्रियते । निर्वाणावस्था पारमार्थिकसत्यस्यानुभूतिरिति स्वीक्रियते । सामान्यतः एतेषां विचाराणां सहयोगः अद्वैतवेदान्तदर्शनेऽपि मिलिष्यति । भवति चैवं माध्यमिकदर्शनम् ॥

## ११) बौद्धधर्मस्य वेदबाहित्वम् :-

प्रकृतमनुसरामः । केचन विद्वांसः बौद्धधर्मस्य उपनिषन्मार्गात् …तान्तपृथक्त्वेन मन्यन्ते । यतः बुद्धेन यज्ञादिकर्मकाण्डस्य समधिकनिन्दा कृता । तस्मात् सः अवैदिकः इति मत्वा तस्य सिद्धान्तः सर्वथा वेदविरुद्धः इत्यङ्गीक्रियते । वेदोक्तेश्वरे अस्य प्रामाण्याभावात् दर्शनस्यास्य नास्तिकत्वमागतम् । यद्यपि अनेन ईश्वरस्यास्तित्वं देवादिपूजादयः खण्डिताः तथापि बुद्धेन अनेकाः उपनिषच्छ्रुतयः स्वमतदार्ढ्याय स्वीकृताः । यथा - तद्ध एक एवाहुः असदेवेदमग्र आसीत् तस्मादसतः सज्जायते (छा० उ० ६-२-१) इत्यादयः । आश्रमचतुष्टयेषु अन्यतमान्तिमत्वेन यः अस्ति संन्यासः सः बुद्धेनापि मुख्यत्वेन स्वीकृतः । सः एव आत्मज्ञाने आत्मज्ञानोपदेशे च अधिकारी इति बुद्धेन निर्णीयते ।

एतदत्र चिन्तनीयं भवति यत् आस्तिकैः पूर्वपक्षत्वेन सिद्धान्तविरोधत्वेन च याः श्रुतयः परिगणिताः सन्ति ताः श्रुतीः बुद्धेन मुख्यत्वेन स्वीकृत्य तासां श्रुतीनामुपरि स्वसिद्धान्तः समुपस्थापितो भवतीति ।

## १२) आत्मनि पुनर्विश्वासः :-

महायानपन्थानुसारं पारमार्थिकत्वेन एकः आत्मा अस्ति, तस्यात्मनः मिथ्या नास्तीति महायानिकाः प्रतिपादयन्ति । प्राचीनबौद्धदर्शने हीनयाने तु आत्मनः अस्तित्वं न मन्यते । अतः साधारणमनुष्यस्य इयमाशङ्का अशान्तिश्च समुत्पन्ना - यदि आत्मनः अस्तित्वं नास्ति तर्हि कस्य मुक्तिः ? कथं वा सा भविष्यति इति । महायानानुसारं केवलहीनात्मनः मिथ्यात्वमुपकल्प्यते । एवं यदा हीनात्मस्थाने महात्मनः अस्तित्वं स्थापितं भवेत् तदा महायानिषु आशायाः पुनः सञ्चारः तिष्ठति । वर्त्तमानसमये हीनयानमहायानयोर्मध्ये परस्परविरोधो वर्तते ।

## १३) बौद्धमते मोक्षस्वरूपविचारः :-

अन्यदार्शनिकेषु उच्यते यः मोक्षः सः बौद्धमते निर्वाणा[illegible] भिधीयते । बुद्धस्य विचारदृष्ट्या ज्ञानप्राप्तिः निर्वाणमिति भण्य[illegible] विच्छिन्नप्रवाहरूपादुत्पन्नानामरूपतृष्णाया: वशीभूतत्वेन या जीवन-प्रवाहरूपात्मकत्वेन सन्ततं गतिशीला, तस्याः प्रवाहात्मकगत्या[illegible] विच्छदप्राप्तिरेव निर्वाणमित्युच्यते । यथा – ज्वलनात्मके दीपे यद्[illegible] तैलसमाप्तिर्भवति तदा स्वयमेव सः दीपः शान्तो भूत्वा अस्तं गमिष्यति[illegible] एवमेव कामादिभागात्मकपुनर्जन्मादि नित्यत्वेन वर्तमानानामात्मा[illegible] श्रवादीनां क्षयानन्तरं पुनः तस्य जीवस्य संसारबन्धने अर्वागागमन[illegible] नष्टं भवति । यत्र तृष्णा सम्पूर्णा नष्टा भवति, एवं भोगाद्याश्रवाण[illegible] किमपि अस्तित्वं न तिष्ठति, तस्याः अवस्थायाः एव भगवान् बुद्ध[illegible] निर्वाणमिति सञ्ज्ञा कृतवान् । इति संक्षिप्तं बौद्धदर्शनम् ।। इति शम् ।





Dr. P. S. Hebbar.

The writer of this book belongs to South Kanara Udupi Taluk, Parampalli Village, Karnataka. He come from respected Brahmin family and his ancesters were great Samskrit Scholars. So Samskrit's blood flows in him also. He learnt Samskrit from his childhood, took full knowledge in Rig - Veda from his father up to 1962, then went to Madras to take education in Adwaita Vedanta in Mylapoor Samskrit College. After that he got **Siromani** degree from Madras University. He researched from 1970 to 72 in Kendreeya Samskrit Vidyapeetha, Tirupati and acquired **Vidyavaridhi ( Ph. D. )** from Varanasey Samskrit University for the thesis "ऋग्वेदे अद्वैत-सिद्धान्तानां समीक्षणम्" In between 1974-76 he worked **Vidyavachaspati (D. Litt )** degree and worte thesis on 'तैत्तिरीयसंहितायाम् अद्वैतसिद्धान्तानां समीक्षणम्'. He also worked as Research Assistant in S. V. Universit, Tirupati under Sankar kosa project and it was completed under his great service. In 1978 he was part-time lecturer in K. S. Vidyapeetha, Tirupati and now he is giving his service as Lecturer in "Adwaita Vedanta" in Sri Sadasiva Kendriya Samskrit Vidyapeetham Puri. **DWADASHA DARSHANA SAMEEKSHANAM** is the frist book coming from him and he believes that it may be usefull to be all Samskrit students.